अनादरः परिभवः परीभावस्तिरस्क्रिया ।
रीढावमाननावज्ञावहेलनमसूक्षणम् ॥ ९३ ॥ (अ)

Disrespect contempt, humiliation – अनादर परिभव परीभाव *m* तिरस्क्रिया रीढा, अवमानना, अवज्ञा *f* ३ वहेलन असूक्षण *n*

वैरं विरोधो विद्वेषो मन्युशोकौ तु शुक् स्त्रियाम् ।

Enmity hatred opposition – वैर *n* विरोध विद्वेष *m*

Grief sorrow distress – मन्यु शोक *m* शुच् *f*
[ शुच 1 P to lament to grieve to bewail ]

पश्चात्तापोऽनुतापश्च स्यादुन्मादश्चित्तविभ्रमः ॥ ९४ ॥

Repentance regret – पश्चात्ताप अनुताप *m*

Madness infatuation ecstacy – उन्माद, चित्तविभ्रम *m*

कोपक्रोधामर्षरोषप्रतिघा रुट्क्रुधौ स्त्रियौ ।

Anger resentment fury – कोप क्रोध, अमर्ष रोष प्रतिघ *m* रुष् क्रुध् *f*

(मृष् 4 & 10 P to bear to suffer to endure patiently to pardon with वि to neglect क्रुध 1 & 4 P to be angry *Caus* to irritate )

शुचौ तु चरिते शीलं रोमाञ्चो रोमहर्षणम् ।
Virtuous conduct.–शील n.=शुचि चरितम् ।
Horripilation, the hair standing on end.–रोमाञ्च m., रोमहर्षण n.

स्नेहः प्रेमाऽस्त्रियां हार्दं प्रियता चाथ दोहदम् ॥९५॥
इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः ।
कामोऽभिलाषस्तर्षोऽथ पुंस्याधिर्मानसी व्यथा ॥९६॥
Affection; kindness, love.–स्नेह m.; प्रेमन् m. & n; प्रियता f.; हार्द n.
Desire, wish, inclination, want.–दोहद n.; इच्छा, काङ्क्षा, स्पृहा, ईहा, तृष्, वाञ्छा, लिप्सा f.; मनोरथ, काम, अभिलाष, तर्ष m.
Mental agony, affliction, anxiety.– आधि m.=मानसी व्यथा [ काङ्क्ष् 1 P. to wish. to desire; with आ to expect. स्पृह् 10 P. A. to desire, to long for, to envy. वाञ्छ् 1 P. to wish ]

स्याच्चिन्ता स्मृतिराध्यानमुत्कण्ठोत्कलिके समे ।
Remembrance. recollection –चिन्ता, स्मृति , आध्यान n.
Longing, pining ( for)– उत्कण्ठा,उत्कलिका f.

उत्साहोऽध्यवसाय स्यात प्रमादोऽनवधानता ॥९७॥

Energy ardour perseverance – उत्साह अध्यवसाय *m*

Carelessness want of precaution –प्रमाद *m* अनवधानता *f*

( ध्यै 1 P to contemplate to think to meditate with अभि to desire to contemplate with नि to be absorbed in meditation with प्रणि to direct one's attention to )

कपटोऽस्त्री व्याजदम्भौ शाठ्यं छद्म च कैतवम् ।

Fraud deceit cheating –कपट *m* & *n*, व्याज दम्भ *m* शाठ्य, छद्मन्, कैतव *n*

घर्मो निदाघ स्वेद स्यात् कौतुकं तु कुतूहलम्॥९८॥

Sweat, perspiration –घर्म, निदाघ, स्वेद *m*

Curiosity, interest wonder –कौतुक ( or कुतुक ) कुतूहल *n*

( स्विद् 4 P to perspire to sweat )

द्रवकेलिपरीहासा क्रीडा लीला च नर्म च ।

Play, amusement –द्रव, केलि परीहास ( or परिहास ) *m* क्रीडा, लीला *f* नर्मन *n*

bling, tripping स्खल् 1 I to stumble to stagger, to falter to err )

स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ १०० ॥

Sleep –निद्रा *f* शयन *n* स्वाप स्वप्न, संवेश *m*

स्वरूपं च स्वभावश्च निसर्गः प्रकृतिः स्त्रियाम् ।

Nature disposition –स्वरूप *n* स्वभाव, निसर्ग *m* प्रकृति *f*

कम्पो वेपथुरुद्धर्षो मह उद्धव उत्सवः ॥ १०१ ॥

Trembling shaking shivering –कम्प, वेपथु *m*

Festival, celebration –उद्धर्ष *m* मह *m* उद्धव *m* उत्सव *m*

( वेप् 1 A to shake to tremble )

इति नाट्यवर्गः ।

---

अधोभुवनपातालं नागलोको रसातलम् ।

The nether world the region of serpents –अधोभुवन, पाताल *n* नागलोक *m* रसातल *n*

गर्तस्तु रन्ध्रं कुहरं श्वभ्रं च विवरं बिलम् ॥ १०२ ॥

A cavity ravine hole गर्त *m* रन्ध्र कुहर श्वभ्र विवर, बिल *n*

अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।

Darkness, gloom.–अन्धकार *m.d n.*; ध्वान्तम् । तमिस्र, तिमिर, तमस् *n.*

ध्वान्ते गाढेऽन्धतमसं विष्वक् संतमसं तमः ॥१०३॥

Intense darkness.–अन्धतमस *n.*=गाढं ध्वान्तम्.

Utter or universal darkness.–संतमस *n.*= विष्वक् तमः ।

वासुकिः सर्पराट् शेषोऽनन्तोऽथाजगरः शयुः ।

The king of snakes –वासुकि, सर्पराज् *m.*

The chief of the serpent race.–शेष, अनन्त *m.*

A large serpent.–अजगर, शयु *m.*

( सर्प+राज=त० स०, syn. सर्पराज, नागराज.)

सर्पो भुजंगो भुजगो नाग आशीविषः फणी ।
दर्वीकरो द्विरसनो व्यालश्चक्षुःश्रवा अहिः ॥ १०४ ॥
उरगः पन्नगो भोगी जिह्मगः पवनाशनः ।

Snake, serpent.–सर्प, भुजंग, भुजग, नाग, आशीविष, फणिन्, दर्वीकर, द्विरसन, व्याल, चक्षुःश्रवस्, अहि, उरग, पन्नग, भोगिन्, जिह्मग, पवनाशन *m.*

( द्वे रसने यस्य ब०=स०; चक्षुषी एव श्रवसी यस्य=स०; भोगिन्=भोग (hood)+इन्, पवन+अशन=ष०, syn. द्विजिह्व.

भोगधर वासागान भुन+गच्छति गत भुजग भुजग or भुजगम उ० त० )

[सृप 1 I to creep to go अपसृप to go away उपसृप to approach समृप to flow विसृप to creep along to go along ]

अहे शरीर भोग स्यात् स्फटाया तु फणा द्वयो ॥१०५॥

The body of a snake —भोग *m* अहे शरीरम ।

The expanded hood of a cobra स्फटा फणा *f* or फण *m*

समौ कञ्चुकनिर्मोकौ क्ष्वेडस्तु गरल विषम् ।

The skin or slough of a snake —कञ्चुक निर्मोक *m*

Poison —क्ष्वेड *m* गरल विष *n*

विषवैद्यो जाङ्गुलिको व्यालग्राह्यहितुण्डिक ॥१०६॥

A dealer in antidotes against poison —विषवैद्य जाङ्गुलिक *m*

*Snake catcher* —व्यालग्राहिन् आहितुण्डिक *m*

इति पातालभोगिवर्ग ।

नरको निरयश्चाथ यातना तीव्रवेदना ।

Hell, the infernal regions –नरक निरय *m*
Agony excessive pain –यातना, तीव्रवेदना *f*

पीडा बाधा व्यथा दुःखकृच्छ्रकष्टानि त्रिष्वपि ॥१०७॥

Pain anguish misery affliction –पीडा, बाधा, व्यथा *f* दुःख, कृच्छ्र, कष्ट *n* & *adj*
( पीड् 10 P to give pain, to afflict, to squeeze, with नि to press to embrace with उप to eclipse बाध् 1 A to oppose, to annoy to grieve, to torment व्यथ् 1 A to tremble to be afflicted to fear, *Caus* to afflict to frighten )

इति नरकवर्गः ।

---

समुद्र सागर सिन्धु पारावार सरित्पति ।
उदन्वानब्धिरुदधिस्तथा रत्नाकरोऽर्णव ॥ १०८ ॥

Ocean sea –समुद्र सिन्धु, सागर, पारावार, सरित्पति, उदन्वत्, अब्धि, उदधि, रत्नाकर, अर्णव *m*
[ सरित्+पति=ष० त०, उदन्+वत् ( possessive termination ) अपः दधाति, जलं दधाति च=अब्धि

रत्नाधश्च रत्न+आकर=प०त० syn [स धुप ते वाराशि or वारिराशि अम्बुधि जलधि जलनाथ इ० ]

अप स्त्री भूम्नि वार्वारि सलिलं जीवनं जलम् ।
अम्भोऽर्णस्तोयपानीयनीरक्षीराम्बुपुष्करम् ॥ १०९ ॥
उदकं च पयः पाथस्त्रिषु द्वे आप्यमम्मयम् ।

Water – अप *f pl* वार वारि सलिल जीवन, जल, अम्भस अर्णस, तोय पानीय नीर, क्षीर अम्बु, पुष्कर * उदक पयस पाथस *n*

Watery aqueous – आप्य अम्मय *adj*

( जीव 1 P to live with अनु to depend upon, to survive with उप to maintain oneself by to subsist upon with सम *Cau* to animate to revive )

( पा 1 P ( पिब ) to drink to swallow, with नि to s p )

भङ्गस्तरंग उर्मिर्वा स्त्रियां वीचिरथोर्मिषु ॥ ११० ॥
महत्सूल्लोलकल्लोलौ स्यादावर्तोऽम्भसां भ्रमः ।

Wave – भङ्ग तरंग *m* ऊर्मि *m* & *f* वीचि *f*

A large wave, surge – उल्लोल, कल्लोल *m* = महानूर्मि ।

Whirlpool – आवर्त *m* = अम्भसां भ्रम ।

( भञ्ज 7 P. to split, to break, to be disappointed )

पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्॥११॥

A drop, spray.–पृषत् *n.*; बिन्दु, पृषत *m.*; विप्रुष् *f.*

तीरं रोधस्तटं कूलं तीरयोः पात्रमन्तरम्।

Bank, shore.–तीर, रोधस् *n.*; तट *n.* ( also *m.*), कूल *n.*

Basin.–पात्र *n.*=तीरयोरन्तरम्।

द्वीपोऽस्त्रियामन्तरीपं यदन्तर्वारिणस्तटम्।

An island.–द्वीप, अन्तरीप *m.* *n.*=वारिणोऽन्तर्वर्ति तटं।

तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्॥ ११२ ॥

A bank or island in a river.–पुलिन *n.*=तोयोत्थितम्।

Sand-bank.–सैकत *n.*=सिकतामयं तीरम्।

जलोच्छ्वासाः परीवाहाः पङ्के जम्बालकर्दमौ।

A channel made to carry off water from an overflowing pond.–जलोच्छ्वास, परीवाह *m.*

Mud, mire.–पङ्क *m.* & *n.*; जम्बाल, कर्दम *m.*

उडुपं तु प्लवः पोतः स्त्रियां नौस्तरणिस्तरिः॥ ११३ ॥

A raft or small boat –उडुप *m*, प्लव पोत *m*

Boat ship –नौ *f* तरणि ( or तरणी ) *f*, तरि ( or तरी ) *f*

(तॄ 1 P to pass over to cross to accomplish to fulfil, *Caus* to save to relieve, *Desider* तितीर्षे to desire to pass over, &c with अव to descend to be incarnate, – to descend down from heaven ( like gods ), with प्र *Caus* to persuade to deceive with वि to grant to give to favor with to give away )

नाव्यं त्रिलिङ्गं नौतार्ये कर्णधारस्तु नाविक ।

Navigable –नाव्य, नौतार्य *adj*

Helmsman –कर्णधार, नाविक *m*

नौकादण्ड क्षेपणी स्यादरित्रं केनिपातक ॥ ११३ ॥अ

An oar –नौकादण्ड *m* क्षेपणी *f*

A rudder, helm –अरित्र *n* केनिपातक *m*

सांयात्रिक पोतवणिक्कूपको गुणवृक्षक ।

A merchant who trades by sea –सांयात्रिक, पोतवणिज *m*

The mast of a ship –कूपक, गुणवृक्षक *m*.

†निम्नागाधात्प्रसन्नोऽच्छः कलुषोऽनच्छ आविलः ।

Clear, clean -प्रसन्न, अच्छ *adj.* Muddy, dirty.-कलुष, अनच्छ, आविल *adj.*

निम्नं गभीरं गम्भीरं गाधोत्तानं विपर्यये ॥ ११४ ॥

Deep -निम्न, गभीर, गम्भीर *adj.*

Shallow.-उत्तान, गाध *adj.*

अगाधमतलस्पर्शो कैवर्ते दाशधीवरौ ।

Unfathomable -अगाध, अतलस्पर्श *adj.*

A fisherman.-कैवर्त, दाश, धीवर *m.*

अथ मत्स्यो झषो मीनो यादांसि जलजन्तवः ॥११५॥

Fish.-मत्स्य, झष, मीन *m.*

Aquatic animal.-यादस् *n.*; जलजन्तु *m.*

स्यात्कुलीरः कर्कटकः कूर्मे कमठकच्छपौ ।

Crab.-कुलीर, कर्कटक *m.*

Tortoise.-कूर्म, कमठ, कच्छप *m.*

नक्रो ग्राहः स्त्रियां शुक्तिः शङ्खः स्यात्कम्बुरस्त्रियां ॥११६॥

A crocodile.-नक्र, ग्राह *m.*

A shell.-शुक्ति *f.*

A conch-shell.-शङ्ख, कम्बु *m.* & *n.*

---

† निम्नागाधात् i. e. from प्रसन्न to अगाध the words are *adj.*

भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः ।

A frog – भेक मण्डूक वर्षाभू *f* शालूर प्लव दर्दुर *m*

जलाशया जलाधारास्तत्रागाधजलो ह्रदः ॥ ११७ ॥

A tank reservoir of water जलाशय जलाधार *m*

A deep lake ह्रद *m* – अगाधजलो जलाशय ।

( आधार *m* a bund a canal )

पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः ।

A lake पद्माकर *m* तडाग *m* & *n* कासार *m*, सरसी *f* सरस् *n*

वेशन्तः पल्वलं चाल्पसरो वापी तु दीर्घिका ॥ ११८ ॥

Pond pool – वेशन्त *m* पल्वल अल्पसरस् *n*

A well with steps – वापी, दीर्घिका *f*

पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वा ।

A well अन्धु प्रहि, कूप *m* उदपान *m* *n*

खेयं तु परिखावाप आलवालं नदी सरित् ।

तरंगिणी शैवलिनी तटिनी निम्नगापगा ॥ ११९ ॥

Ditch trench – खेय *n* परिखा *f*

A basin for water round a tree – आवाप *m*, आलवाल *n*

Lotus ( in general ) –पद्म *n* & *m* नलिन, अरविन्द सरोरुह, पङ्केरुह, तामरस, शतपत्र, कुशेशय, कमल, राजीव पुष्कर अम्भोरुह *n*

( सरसि, पङ्के अम्भसि वा रोहति इति सरोरुहादय = उ० त० शतं पत्राणि यस्य तत्=ब० syn सरसिज, सरोज, पङ्कज सहस्रपत्र अम्भोज अब्ज )

[ रुह् 1 P to grow आरुह् to ascend अवरुह् to descend to alight अधिरुह् to mount on ]

पुण्डरीकं कोकनदं शैवालं शैवलोऽपि तत् ॥ १२३ ॥

White lotus पुण्डरीक *n*

Red lotus –कोकनद *n*

Moss –शेवाल ( or शै० ) *m* शैवल *m*

मृणाल तु बिस नालमस्त्री किञ्जल्ककेसरौ ।

Fibres in a lotus –मृणाल, बिस *n*

Stalk of a lotus –नाल *m* & *n*

Filaments or pollen of a lotus –किञ्जल्क, केसर *m*

कुमुद्वती कुमुदिनी नलिन्या पद्मिनीमुखा ॥ १२४ ॥

The plant of white lotus –कुमुद्वती, कुमुदिनी *f*

Common lotus plant –नलिनी पद्मिनी, कमलिनी इ० *f*.

इति धातिवर्गः ।

भूर्भूमिः पृथिवी क्षोणी रसा विश्वंभरा क्षितिः ।
धरा धरित्री धरणिः क्ष्माऽवनिर्मेदिनी मही ॥
वसुंधरोर्वी वसुधा जगती सागराम्बरा ॥ १२५ ॥

The earth.–भू, भूमि, पृथिवी (or पृथ्वी), क्षोणी, रसा, विश्वंभरा, क्षिति, धरा, धरित्री, धरणि, क्ष्मा, अवनि, मेदिनी, मही, वसुंधरा, उर्वी, वसुधा, जगती, सागराम्बरा *f.*

विश्वं बिभर्ति इति=उ० स०; वसूनि+धारयति इति=उ० स०, वसु *n.* a jewel; सागर एवाम्बरं यस्याः सा=ब०, syn. लोकधात्री, वसुमती, रत्नगर्भा, रत्नसू, समुद्रवसना इ०.

मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिका ।

Soil, earth.–मृद्, मृत्तिका *f.*

Fertile soil.–उर्वरा *f.* or *adj.*=सस्याढ्या ।

Barren or saline soil.–ऊषरा *f.* or *adj.*= सस्यविहीना ।

त्रिष्टपो जगती लोको विष्टपं भुवनं जगत् ॥ १२६ ॥

The world.–जगती *f.*; लोक *m.*; विष्टप, भुवन, जगत् *n.*

नीवृज्जनपदो देशविषयौ तूपवर्तनम् ।

An inhabited country, kingdom –नीवृत् जनपद *m*

A country region –देश, विषय *m* उपवर्तन *n*

सुराज्ञि देशे राजन्वान् स्यात्ततोऽन्यत्र राजवान् ॥१२७॥

( A country ) governed by a good king –राजन्वत् *adj*

( A country ) ruled by a king –राजवत् *adj*

शाद्वलः शादहरिते सजम्बाले तु पङ्किलः ।

Green with grass, verdant –शाद्वल, शादहरित *adj*

Muddy, marshy –सजम्बाल, पङ्किल *adj*

गोष्ठं गोस्थानकं चैव वल्मीकं पुंनपुंसकम् ॥१२७॥ अ

Cow pen –गोष्ठ, गोस्थानक *n*

Ant hill –वल्मीक *m* & *n*

पर्यन्तभूः परिसरः सेतुराली स्त्रियां पुमान् ।

Skirts –पर्यन्तभू *f* परिसर *m*

Bridge, mound bund –सेतु *m* आलि *f*

अयनं वर्त्म मार्गाध्वपन्थानः पदवी सृतिः ॥ १२८ ॥

सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ।

Road, path, way.–अयन, वर्त्मन् *n.*; मार्ग, अध्वन्, *पथिन् *m.*, पदवी, सृति, सरणि, पद्धति, रथ्या *f.*

Crossing of roads.– शृङ्गाटक, चतुष्पथ *n.*

दुर्गमे वर्त्म कान्तारं विपथः कापथः समौ ॥ १२९ ॥

Wilderness, difficult pass.–कान्तार *n.* = दुर्गम वर्त्म ।

Bad road.–विपथ, कापथ *m.*

गव्यूतिः स्त्री क्रोशयुगं सुपन्थाश्चापि सत्पथः ।

Two koss –गव्यूति *f.*=क्रोशयुग *n.*

(क्रोश *m.*=a koss).

Good road.–सुपथिन्, सत्पथ *m.*

द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी ॥

The earth and the sky –द्यावापृथिवी *f.* *du.*; द्यावाभूमि *f. du.*; रोदसी *f. du.*; रोदस् *n. du.*

इति भूमिवर्गः ।

---

पूः स्त्री पुरीनगर्यौ वा पत्तनं पुटभेदनम् । स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ।

Town, city –पुर् *f.*; पुरी *f.* or पुर *n.*; नगरी *f.* or नगर *n.*; स्थानीय, पत्तन *n.*

आपणस्तु निषद्यायां विपणिः पण्यवीथिका ।

Shop.–आपण *m.*; निषद्या *f.*

Market –विपणि *f* –पण्यवीथिका *f*

वप्रं चयोऽथ प्राकारो भित्तिः स्त्री कुड्यमेव च ॥१३१॥

A mud wall –वप्र *n* चय *m*

An enclosure or rampart –प्राकार *m*

Wall partition भित्ति *f* कुड्य *n*

गृहं गेहं च सदनं भवनागारमन्दिरम् ।

निकेतनं वेश्म सद्म निशान्तं निलयालयौ ॥ १३२ ॥

House dwelling –गृह गेह सदन भवन अगार, मन्दिर निकेतन वेश्मन् सद्मन् निशान्त *n* निलय आलय *m*

( ली 1 10 9 P to adhere to dwell to live with नि to lie down to hide oneself )

वासः कुटी सभा शाला पर्णशालोटजोऽस्त्रियाम् ।

A house hall a shed –वास *m* कुटी सभा, शाला *f*

Hermitage hut –पर्णशाला *f* उटज *m* & *n*

गर्भागारं वासगृहं वाजिशाला तु मन्दुरा ॥ १३३ ॥

The middle of a house sleeping room – गर्भागार, वासगृह *n*

Stable –वाजिशाला मन्दुरा *f*

( वस 1 P to dwell, to live with अधि to

inhabit; with उप to observe a fast, to fast; with निर् *Cau.* to banish; with प्र to travel, to go abroad.)

मठश्छात्रादिनिलयो गञ्जा तु मदिरागृहम् ।

A school or building inhabited by students or ascetics; a monastery.–मठ *m.*= छात्रादीनां निलयः । -

A tavern.–गञ्जा *f.*; मदिरागृह *n.*

कुट्टिमोऽस्त्री निबद्धाभूश्चन्द्रशाला शिरोगृहम् ॥१३३॥

A floor or ground paved or plastered – कुट्टिम *m. & n.*=निबद्धा भूः ।

An apartment on the house-top, terrace.- चन्द्रशाला *f.*; शिरोगृह *n.*

आवेशनं शिल्पिशाला प्रपा पानीयशालिका ।

Workshop, manufactory.–आवेशन *n.*; शिल्पिशाला *f.*

A place where water is distributed, cistern.–प्रपा, पानीयशालिका *f.*

वातायनं गवाक्षोऽथ सौधोऽस्त्री भूपमन्दिरम् ॥१३४॥

Window.–वातायन *n.*; गवाक्ष *m.*

Palace.–सौध *m. & n.*; भूपमन्दिर *n.*

हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् ।
Mansion -हर्म्य n.-धनिनां वास ।
Royal palace or temple प्रासाद n -देवभू
भुजां वास ।

अन्तःपुरं तु शुद्धान्तश्चावरोधोऽथ देहली ॥ १२५ ॥
Harem -अन्तःपुर n शुद्धान्त अवरोध n
Threshold -देहली f
गोपानसी तु वलभी चत्वरं स्वजिराङ्गन ।
Roof -गोपानसी वलभी f
Compound quadrangle -चत्वर, अजिर अ-
गन

स्त्री द्वार्द्वारं प्रतीहारः स्याद्वितर्दिस्तु वेदिका ॥१२६ ॥
Door entrance -द्वा f द्वार n प्रतीहार m
A raised seat वितर्दि वेदिका f
तोरणोऽस्त्री बहिर्द्वारं पुरद्वारं तु गोपुरम् ।
A front door an ornamental arch -तोरण
m d. n -बहिर्द्वारम् ।

A town-gate-पुरद्वार गोपुर n
कपाटमररं तुल्ये तद्विष्कम्भोऽर्गलं न ना ॥
The leaf or panel of a door -कपाट अरर n
A wooden bolt to fasten the door,-अर्गल

*f.* & *n.*=कपाटस्य विष्कम्भः। ( विष्कम्भ *m.* Obstacle, hindrance; & therefore the bolt of a door.)

आरोहणं स्यात्सोपानं ग्रामसंवसथौ समौ ॥ १३७ ॥

A staircase.–आरोहण, सोपान *n.*
A village –ग्राम, संवसथ *m.*

संमार्जनी शोधनी स्यात्संकरोऽवकरस्तथा ।

Broom, brush.–संमार्जनी, शोधनी *f.*
Sweepings, dust –संकर, अवकर *m.*

इति पुरवर्गः ।




---

महीध्रे शिखरिक्ष्माभृदहार्यधरपर्वताः ॥ १३८ ॥
अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः ।

Mountain, hill.–महीध्र, शिखरिन् , क्ष्माभृत्, अहार्य, धर, पर्वत, अद्रि, गोत्र, गिरि, ग्रावन्, अचल, शैल, शिलोच्चय *m*

( महीं धारयति, क्ष्मां बिभर्ति, गा त्रायते, इ०=महीध्रादयः उ० त०, Syn. महीधर, भूधर, धराधर, भूभृत्, महीभृत्. )

पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषद् ॥ १३९ ॥

Stone, rock.–पाषाण, प्रस्तर, ग्रावन्, उपल, अश्मन् *m* ; शिला, दृषद् *f.*

कूटोऽस्त्री शिखरं शृङ्गं प्रपातस्त्वतटो भृगुः ।

Top, summit –कूट *m* & *n* शिखर, शृङ्ग *n*

Cliff, precipice –प्रपात, अतट, भृगु *m*

कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम् ॥१४०॥

The side or ridge of a mountain –कटक *m* & *n*.=अद्रेर्नितम्ब ।

Table land, level land on the top of a mountain –स्नु प्रस्थ *m* सानु *m* & *n*

धातुर्मनःशिलाद्यद्रेः पादाः प्रत्यन्तपर्वताः ।

उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ॥ १४१॥

Ore, mineral, metal –धातु *m*

Foot of a mountain –पाद *m* =प्रत्यन्तपर्वत ।

Cascade, waterfall –उत्स *m* प्रस्रवण *n*

Spring, fountain –वारिप्रवाह, निर्झर, झर *m*

दरी तु कन्दरो वा स्त्री गह्वरं तु गुहा स्मृता ।

Valley, vale – दरी *f* कन्दर *m* or कन्दरा *f*

Cave, den –गह्वर *n* गुहा *f*

निकुञ्जकुञ्जौ वा क्लीबे खनिः खानी तथाकरः ॥१४२॥

Grove, bower –निकुञ्ज, कुञ्ज *m* & *n*

A mine –खनि, खानी *f* आकर *m*

उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका ।

Land near the foot of a mountain.–उपत्यका *f.*=अद्रेरासन्ना भूमिः ।

Land on the upper part of a mountain.–अधित्यका *f.*=अद्रेरूर्ध्वं भूमिः ।

इति शैलवर्गः ।

---

अटव्यरण्यं विपिनं गहनं काननं वनम् ॥ १४३ ॥

Forest, wilderness, jungle.–अटवी *f.*; अरण्य, विपिन, गहन, कानन, वन *n.*

आरामः स्यादुपवनं कृत्रिमं वनमेव यत् ।

A garden, a grove –आराम *m.*; उपवन *n.*

पुमानाक्रीड उद्यानमङ्कुरोऽभिनवोद्भिदि ॥ १४४ ॥

A royal or public garden.–आक्रीड *m.*; उद्यान *n.*

A Sprout.–अङ्कुर *m* =अभिनवोद्भिद् ।

वीथ्यालिरावलिः पङ्क्तिः श्रेणी लेखास्तु राजयः ।

Row.–वीथी, आलि, आवलि, पङ्क्ति, श्रेणी ( or ०णि ) *f.*

Continuous or thick line.–लेखा, राजि *f.*

वृक्षो महीरुहः शाखी विटपी पादपस्तरुः ॥ १४५ ॥

अनोकहः कुटः शालः पलाशी द्रुद्रुमागमाः ।

Tree –वृक्ष, महीरुह, शाखिन्, विटपिन्, पादप, तरु, अनोकह कुट शाल, पलाशिन् द्रु द्रुम, अगम *m*

वन्ध्योफलोऽवकेशी च फलवान् फलिन फली ।

Barren, fruitless –वन्ध्य ( बन्ध्य ), अफल, अवकेशिन् *adj*

Bearing fruit fruitful –फलवत्, फलिन, फलिन् *adj*

( फल 1 P to produce to bear fruits With प्रति to be reflecte l )

निपुल्ले विकसितान्मीलिती विकचस्फुटौ ॥ १४६ ॥

Blown opened –फुल्ल, विकसित, उन्मीलित, विकच, स्फुट *adj*

(फुल्ल 1 P to blossom to open मील 1 P to close to wink, to close the eyes मीलय *Caus* to cl se to shut उन्मील to be opened as eyes or a flower to open समुन्मील to open of itself to spring up to rise निमील to close to sl ut to be covered स्फुट 6 P & 1 A to burst to open to expand )

लता तु वल्ली प्रतति सा वीरुधा प्रतानिनी ।

Creeper –लता, वल्ली, प्रतति *f*

A spreading creeper.-वीरुध् *f.*=प्रतानिनी लता।

नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः ॥ १४७ ॥

Height; loftiness.-आरोह, उच्छ्राय, उत्सेध, उच्छ्रय *m.*=नगादीनामारोहः।

अस्त्री प्रकाण्डः स्कन्धः स्यात् समे शाखालते तथा ।

The trunk of a tree.-प्रकाण्ड *m.* & *n.* स्कन्ध *m.*

Bough, branch -शाखा, लता *f.*

शिरोऽग्रं शिखरं त्वक् स्त्री वल्कं वल्कलमस्त्रियाम् ॥१४८॥

The top or crown of a tree.-शिरस्, अग्र, शिखर *n.*

Bark.-त्वच् *f.*; वल्क, वल्कल *m.* & *n.*

ग्रन्थिर्ना पर्वपरुषी स्तम्बगुल्मौ शिफाजटे ।

A knot, a joint in a cane or body.-ग्रन्थि *m.*; पर्वन्, परुस् *n.*

Shrub.-स्तम्ब, गुल्म *m.*

A fibrous root.-शिफा, जटा *f.*

काष्ठं दार्विन्धनं त्वेध इध्ममेधः समित्स्त्रियाम् ।

Wood.-काष्ठ, दारु *n.*

Fuel,dry wood.-इन्धन,एधस्, इध्म *n.*; एध *m.*; समिध् *f.* ( इन्ध् 7 A. to kindle. )

निष्कुह कोटर वा ना वल्लरिर्मञ्जरि स्त्रियौ ॥१४९॥
The hollow of a tree – निष्कुह *m*, कोटर *n* & *m*

Shoot sprout blossom – वल्लरि, मञ्जरि or मञ्जरी *f*

पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।
Leaf foliage पत्र पलाश छदन दल पर्ण *n* छद *n*

पल्लवोऽस्त्री किसलयं विस्तारो विटपोऽस्त्रियाम् ॥१५०॥
A twig full of young leaves पल्लव *m* & *n* किसलय *n*

The extension of a tree – विस्तार *m* विटप *m* & *n*

वृक्षादीनां फलं सस्यं वृन्तं प्रसवबन्धनम् ।
Crops harvest – सस्य *n* – वृक्षादीनां फलम् ।
Stalk stem – वृन्त *n* – प्रसवबन्धनम् ।

स्याद्गुच्छकस्तु स्तबकः कुड्मलो मुकुलोऽस्त्रियाम् ॥१५१॥
Bunch nosegay – गुच्छक स्तबक *m*
An opening bud – कुड्मल *m* मुकुल *m* & *n*

स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम् ।

Flower -सुमनस् *f. pl.*; पुष्प, प्रसून, कुसुम, सुम *n.*

मकरन्दः पुष्परसः परागः सुमनोरजः ॥ १५२ ॥

The nectar of a flower.-मकरन्द *m.*=पुष्परसः।

Pollen.-पराग *m.*=सुमनसां रजः ।

कोरकः पुंसि कलिका मन्दारः पारिजातकः ।

Bud.-कोरक *m.*; कलिका *f.*

A kind of tree.-मन्दार, पारिजातक *m.*

आम्रश्चूतो रसालोऽपि सहकारोऽथ वेतसे ॥ १५३ ॥

शीतवञ्जुलवानीराः पलाशे पर्णकिंशुकौ ।

Mango tree.-आम्र, चूत, रसाल, सहकार *m.*

The Ratan reed.-वेतस, शीत, वञ्जुल, वानीर *m.*

The Palas'a tree -पलाश, पर्ण, किंशुक *m.*

अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता ॥१५४॥

The creeper *Mogra*.-अतिमुक्त, पुण्ड्रक *m.*; वासन्ती, माधवी, लता *f.*

सुमना मालती जातिः सप्तला नवमालिका ।

The creeper jasmine -सुमना ( or सुमनस् ), मालती, जाति *f.*

A creeper.-सप्तला, नवमालिका *f.*

मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च ॥१५५॥

The vine also grape—मृद्वीका, गोस्तनी, द्राक्षा, स्वाद्वी, मधुरसा *f*

अस्त्री कुशं कुथो दर्भो वदो वेणुश्च कीचक ।

A kind of grass—वदा *m* & *n* क्थ, दर्भ *m*

Bamboo tree a bamboo—वदा, वेणु, कीचक *m*

शष्प बालतृण घासो यवस तृणमर्जुनम् ॥ १५६ ॥

Young grass—शष्प बालतृग *n*

Meadow or pasture grass—घास *m*, यवस *n*

Grass in general—तृण अर्जुन *n*

( घस 1 P to devour to eat )

अश्वत्थ पिप्पलो बिल्व श्रीफलोऽप्युदुम्बर ।

अम्लिका तिन्तिडी चिञ्चा कर्कन्धूर्बदरी तथा ॥ १५६ अ

The Indian fig tree—अश्वत्थ, पिप्पल *m*

The *Bel* tree or its fruit—बिल्व, श्रीफल *m*

The glomerous fig tree—उदुम्बर *m*

The tamarind tree—अम्लिका तिन्तिडी, चिञ्चा *f*

The jujube tree—कर्कन्धू, बदरी *f*

इङ्गुदी तापसतरुर्भूर्जे चर्मिमृदुत्वचौ ।

ताम्बूलवल्ली ताम्बूली नागवल्ल्यथ केसरे ॥१५६॥ आ

बकुलो धञ्जुलोऽशोके समौ करकदाडिमौ ।

The name of a plant.– इङ्गुदी *f*.; तापसतरु *m*.
The birch-tree.– भूर्ज, चर्मिन्, मृदुत्वच् *m*.
The *betel*-plant.– ताम्बूलवल्ली, ताम्बूली, नाग-वल्ली *f*.
The *Bakul* tree.– केसर, बकुल *m*.
The *Asoka* tree.– वञ्जुल, अशोक *m*.
The pomegranate tree.– करक, दाडिम *m*.
[illegible]: कदम्बः प्रियको बन्धूको बन्धुजीवकः ॥१५६॥
The *Kadamba* tree – नीप, कदम्ब, प्रियक *m*.
The *Bandhuka* plant.– बन्धूक, बन्धुजीवक *m*.

[illegible] शोणे कुरबकस्तथा पीते कुरण्टकः ।
नालिकेरो नारिकेलस्तापिच्छस्तु तमालकः ॥ १५६ ॥
A crimson species of Amaranth, its [illegible]ower ( when neuter ).– कुरबक *m*. & *n*.
The yellow species of Amaranth.– कुर-ण्टक *m*.
The cocoanut tree.– नालिकेर, नारिकेल *m*.
The *tamala* tree, with dark blossoms.– [illegible]पिच्छ, तमाल *m*.

[illegible]स्त्वेक्षुः पुष्पफला रम्भा तु कदली स्त्रियाम् ।
The sugar-cane –रसाल, इक्षु *m*.

The gourd creeper – तुम्बी, अलाबु *f*
The plantain tree – रम्भा, कदली *f*
खदिरो रक्तसारश्च चम्पको हेमपुष्पकः ॥ १५६ ॥ उ
The *Khadira* tree – खदिर, रक्तसार *m*
The *Champaka* tree – चम्पक, हेमपुष्पक *m*
कुन्द शिरीष धत्तूर केतकी मल्लिका जपा ।
प्रियङ्गु पूग एरण्ड शमी चामलकी तथा ॥१५६॥क
A kind of jasmine – कुन्द *n*
The *Sirisha* tree – शिरीष *n*
The *Dhattura* tree – धत्तूर *m*
The *Ketaka* tree – केतकी *f*
The *Mogri* plant – मल्लिका *f*
The *jasianda* plant – जपा *f*
The *Priyangu* plant – प्रियङ्गु *m*
The betel nut tree – पूग *m*
The castor oil plant – एरण्ड *m*
The *Sami* tree – शमी *f*
A kind of tree – आमलकी *f*
पलाण्डुर्लशुनो मुस्ता दूर्वा श्यामाक एव च ।
An onion – पलाण्डु *m*
Garlic – लशुन *m*

A kind of grass.– मुस्ता *f.*
A kind of grass.– दूर्वा *f.*
A sort of grain.– श्यामाक *m.*

जम्बूः स्त्री पुंसि जम्बीरः कर्कटी शाल्मलिर्द्वयोः॥१५६॥ अ

A fruit tree.– जम्बू *f.*
The citron tree.– जम्बीर *m.*
The cucumber.– कर्कटी *f.*
The silk-cotton tree.– शाल्मलि *m.* & *f.*

इति वनौषधिवर्गः ।

---

शार्दूलद्वीपिनौ व्याघ्रे कण्ठीरवमृगद्विषौ ।
सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ॥१५७॥

Tiger.– शार्दूल, द्वीपिन्, व्याघ्र *m.*

Lion.– कण्ठीरव, मृगद्विष्, सिंह, मृगेन्द्र, पञ्चास्य, हर्यक्ष, केसरिन्, हरि *m.*

( मृग+द्विष्, मृग+इन्द्र=प० त०; पञ्च आस्यं यस्य=ब०. पञ्च *adj.* spreading, wide. केसरा अस्य सन्ति इति के०. केसर *m.* the mane of the lion or horse, Syn. मृगराज, मृगारि, पञ्चानन. )

कपिप्लवगप्लवगशाखामृगवलीमुखाः ।
मर्कटो वानरः कीशो वराहः कोलसूकरौ ॥ १५८ ॥

Monkey – कपि प्लवग, प्लवग, शाखामृग, वलीमुख, मर्कट वानर, कीश *m*

( प्लव गच्छति इति प्लवग , प्लवग & also प्लवगम – उ० स० )

Hog – वराह कोल सूकर *m*

भल्लूक ऋक्षो महिषे लुलायश्चाथ जम्बुक ।
शृगालो वञ्चक क्रोष्टा काकस्त्वीहामृगो वृक ॥१५९॥

Bear भल्लूक ऋक्ष *m*

Buffalo – महिष लुलाय *m*

Fox jackal – जम्बुक शृगाल वञ्चक, क्रोष्टु *m*

Wolf – काक ईहामृग वृक *m*

आतुर्विडाल मार्जारो वृषदंशक आखुभुक् ।

A cat ओतु बिडाल मार्जार, वृषदंशक, आखुभुज *m*

[ दश ( दंश् ) 1 P to bite with परि to bite through to bite violently with सम् to press together to crush, to pinch ]

चमूरुकृष्णसारैणत्ररङ्कुहरिणा मृगे ॥ १६० ॥

Deer antelope चमूरु, कृष्णसार ( or ०सार ) एण कुरङ्ग हरिण मृग *m*

रङ्क्वादयस्तु भेदाश्च मृगजातय ।

Different kinds of deer or antelope.– रुरु, सारंग, पृषत, इ० *m.*

कृमिकीटौ क्षुद्रजन्तौ वृश्चिकः शूककीटकः ॥ १६०॥ अ

Insect, worm.– कृमि, कीट *m.*=क्षुद्रजन्तुः ।

A scorpion, a caterpillar.-वृश्चिक, शूककीट *m.*

ऊर्णनाभस्तन्तुवाय आखुरुन्दुरमूषकौ ।

A spider.– ऊर्णनाभ, तन्तुवाय *m.*

A mouse – आखु, उन्दुर ( or उन्दुरु ), मूषक *m.*

( ऊर्णु 2 P. A. to cover. मूष् 1 P. or मुष् 1, 9 P. to steal.)

गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः ॥

The king of birds, eagle – गरुत्मत्, गरुड, तार्क्ष्य, वैनतेय, खगेश्वर *m.*

पारावतः कलरवः कपोतोऽथ शशादनः ॥ १६१ ॥

पत्री श्येन उलूकस्तु वायसारातिपेचकौ ।

दिवान्धः कौशिको घूको दिवाभीतो निशाटनः॥१६२॥

A pigeon, dove – पारावत, कलरव, कपोत *m.*

A hawk, falcon.– शशादन, पत्रिन्, श्येन *m.*

Owl.– उलूक, वायसाराति, पेचक, दिवान्ध, कौशिक, घूक, दिवाभीत, निशाटन *m.*

( निशायां अटति इति निशाटनः; अट् 1 P. to

roam, to wander With परि to wander about, to make a tour)

कृकवाकुस्ताम्रचूड कुक्कुटश्चरणायुध ।

.A cook – कृकवाकु, ताम्रचूड, कुक्कुट, चरणायुध *m*

चटक कलविङ्क, स्याद् बलाका बिसकण्ठिका ॥१६३॥

Sparrow – चटक, कलविङ्क *m*

A kind of crane – बलाका, बिसकण्ठिका *f*

वनप्रिय परभृत कोकिल पिक इत्यपि ।

Cuckoo – वनप्रिय, परभृत, कोकिल, पिक *m*

( पर+भृत=तृ० त०, syn परपुष्ट )

काकस्तु बलिभुग् ध्वाङ्क्षो वायसो मौकुलिस्तथा ॥१६४॥

Crow – काक, बलिभुग, ध्वाङ्क्ष, वायस, मौकुलि *m*

( बलिं भुङ्क्ते =उ० त०, syn बलिपुष्ट )

आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ ।

A kite – आतापिन्, चिल्ल *m*

A vulture – दाक्षाय्य, गृध्र *m*

A parrot – कीर, शुक *m*

क्रुङ् क्रौञ्चोऽथ बक कङ्क पुष्कराह्वस्तु सारस ॥१६५॥

Heron – क्रुञ्च, क्रौञ्च *m*

A crane – बक, कङ्क *m*

A kind of crane – पुष्कराह्व, सारस *m*

कोकश्चक्रश्चक्रवाक कादम्ब कलहंसक ।
Ruddy goose – कोक, चक्र, चक्रवाक *m*
A kind of goose – कादम्ब, कलहंस *m*
हंसभेदो राजहंसो मल्लिकाक्षस्तथाऽपर ॥ १६६ ॥
Flamingo swan – हंस *m*
Kinds of swans – राजहंस, मल्लिकाक्ष *m*
समौ चातकसारंगौ दंशस्तु वनमक्षिका ।
The *chataka* bird – चातक, सारंग *m*
A gad fly, a large wasp – दंश *m*, वनमक्षिका *f*
वरटा स्त्रीपि गन्धोली सरघा मधुमक्षिका ।
Wasp – वरटा, गन्धोली *f*
Bee – सरघा, मधुमक्षिका *f*
समौ पतंगशलभौ खद्योतो ज्योतिरिङ्गण ॥ १६७ ॥
A grass-hopper – पतंग शलभ *m*.
Glow-worm, firefly – खद्योत, ज्योतिरिङ्गण *m*
मधुव्रतो मधुकरो मधुलिण्मधुपालिन ।
द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालय ॥ १६८ ॥
A bee – मधुव्रत, मधुकर, मधुलिह्, मधुप, द्विरेफ, पुष्पलिह्, भृङ्ग, षट्पद, भ्रमर, अलि *m*

मयूरो बर्हिणो बर्ही नीलकण्ठो भुजगभुक् ।
शिखावलः शिखी केकी मेघनादानुलास्यपि ॥ १६९ ॥

A peacock – मयूर, बर्हिण, बर्हिन्, नीलकण्ठ, भुजंगभुज्, शिखावल, शिखिन्, मेघनादानुलासिन् *m*

( भुजगान् भुङ्क्ते इति=उ० त० the snake eater नील+कण्ठ=क०, शिखा, केका अस्यास्तीति–शिखी, केकी मेघनादं अनुलसति इति=उ० त०, syn भुजगाशन, भुजगद्विष शितिकण्ठ, शिखण्डिन् )

केका वाणी मयूरस्य समौ चन्द्रकमेचकौ ।

Cry of the peacock – केका *f* –मयूरस्य वाणी ।

The eye on peacock's feathers – चन्द्रक, मेचक *m*

शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ॥ १७० ॥

Crest – शिखा, चूडा *f*

Feathers tail – शिखण्ड *m* पिच्छ, बर्ह *n*

शकुन्तिरण्डजः पक्षी शकुन्तिविहगद्विजाः ।
खगः पत्री विहायाश्च विविष्किरपतत्रयः ॥ १७१ ॥

A bird – शकुन्ति, अण्डज, पक्षिन्, शकुन्त, विहग, द्विज, खग, पत्रिन् विहायस्, वि, विष्किर, पतत्रि ( or पतत्रिन् ) *m*

कारण्डवस्तिरस्तित्तिरिश्च जीवंजीवश्चकोरक ।

Different kinds of birds.– कारण्डव *m.*; तित्तिर *m.*; जीवजीव *m.*; चकोर *m.*

पक्षः पत्रं पतत्रं च चञ्चुस्त्रोटिरुभे स्त्रियौ ॥

A wing.– पक्ष *m.*; पत्र, पतत्र *n.*

Beak, bill.– चञ्चु, त्रोटि *f.*

पेशी कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ॥१७२॥

Egg.– पेशी *f.*; कोश *m.*; अण्ड *n.*

A nest.– कुलाय *m.*; नीड *m.* & *n.*

पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।

A young, a child.– पोत, पाक, अर्भक, डिम्भ, पृथुक, शावक, शिशु *m.*

स्त्रीपुंसौ मिथुनं द्वन्द्वं युग्मं तु युगलं युगम् ॥ १७३ ॥

A couple, a pair ( male and female ).– स्त्रीपुंस *m. du.*, मिथुन, द्वन्द्व *n.*

A pair.– युग्म, युगल, युग *n.*

समूहनिवहव्यूहसंदोहविसरव्रजाः ।
समुदायश्च संघातः समवायश्चयो गणः ॥ १७४ ॥
स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ।

A collection, group, flock, troop, herd, crowd.– समूह, निवह, स्तोम, संदोह, निकर, व्रज, समु-

दाय, सघात, समवाय चय, गण *m* सहति *f*, वृन्द, निकुरम्ब, कदम्बक *n*

वृन्दभेदाः समैर्वर्गः सघसार्थौ तु जन्तुभिः ॥ १७५ ॥
सजातीयैः कुलं यूथं तिरश्चां पुन्नपुंसकम् ।

A class, species – वर्ग *m* =समैरेकैर्वृन्दम् ।

Flock of animals – सघ, सार्थ *m* =प्राणिभिः सजातीयैर्विजातीयैर्वा वृन्दम् ।

A collection or flock of animals of the same kind – कुल *n*

Herd flock – यूथ *m* & *n* –तिरश्चां वृन्दम् ।

पुञ्जो राशिश्चोत्करश्च कूटं स्यात्पुन्नपुंसकम् ।

*A heap – पुञ्ज राशि उत्कर *m* कूट *m* & *n*

गृहासक्ताः पक्षिमृगाद्याश्छेकास्ते गृह्यकाश्च ते ॥ १७६ ॥

Tame or domesticated ( bird or beast) – छेक, गृह्यक *adj* =गृहासक्त पक्षी मृगो वा ।

इति सिंहादिवर्गः ।

---

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः ।

Man – मनुष्य मानुष, मर्त्य मनुज, मानव, नर *m*

स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ १७७ ॥

Male – पुंस्, पञ्चजन, पुरुष पूरुष, नृ *m*

स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः ।
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ १७८ ॥

Woman, female – स्त्री, योषित्, अबला, योषा, नारी, सीमन्तिनी, वधू, प्रतीपदर्शिनी, वामा, वनिता, महिला *f*

विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना ।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ॥१७९॥
सुन्दरी रमणी रामा कोपना सैव भामिनी ।
वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी ॥ १८० ॥

Words denoting varieties of women but now used in the general sense of a beautiful woman – मानिनी *f*=one indignant towards her lover कोपना, भामिनी *f*=Passionate or angry-tempered woman (वामे लोचने यस्याः सा=व०, वरो आरोहो यस्या सा=व० one of excellent hips Syn वामलोचना, वरारोहा )

पत्नी पाणिगृहीती च द्वितीया सहधर्मिणी ।
भार्या जायाऽथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी॥१८१॥
पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ।

Wife – पत्नी, पाणिगृहीती, द्वितीया, सहधर्मिणी, भार्या, जाया *f*, दार *m pl*

*Matron* – कुटुम्बिनी पुरन्ध्री *f*

A chaste or faithful wife – सुचरित्रा, सती, साध्वी पतिव्रता *f*

कृताभिषेका महिषी कन्या तु स्यात्कुमारिका॥ १८२॥

A crowned queen – महिषी *f* = कृताभिषेका नृपस्त्री।

A girl – कन्या, कुमारी or कुमारिका *f*

पुंश्चली धर्षिणी बन्धक्यसती कुलटेत्वरी।

स्वैरिणी पांशुला च स्यात्तरणी युवति समे॥ १८३॥

An unchaste woman harlot – पुंश्चली, धर्षिणी, बन्धकी, असती कुलटा इत्वरी स्वैरिणी पांशुला *f*,

A young woman – तरुणी, युवति *f*

रजस्वला पुष्पवती स्याद्रज पुष्पमार्तवम्।

A woman in her courses – रजस्वला, पुष्पवती *f*

The menses – रजस् पुष्प, आर्तव *n*

पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषू पति।

A widow re marrie l – पुनर्भू, दिधिषू *f* = द्विरूढा।

The husl and of a re married widow – दिधिषू *m* = तस्या पति।

कान्तार्थिनी तु या याति संकेतं साभिसारिका ॥१८३ अ

A woman who makes or keeps an assignation.– अभिसारिका *f.*= या कान्तार्थिनी०. ( संकेत *m.* assignation .)

पत्यौ देशान्तरगते यात्ता प्रोषितभर्तृका ।

A woman whose husband is gone to a distant country.– प्रोषितभर्तृका *f.*

आयात्यन्योपभोगाङ्कैर्यस्या उपपति तु प्रियः॥१८३॥ख
ण्डिता साऽपायस्य पतिं या परितप्यते ।
कलहान्तरिता सा स्याद्विप्रलब्धा तु या भयेत्॥१८३॥इ
अनालोक्य पतिं खिन्ना या संकेतनिकेतने ।

खण्डिता *f.*= A woman whose lover has been false to the appointment and is suspected of inchastity; a disappointed and offended woman.

कलहान्तरिता *f.*= A woman who has been angry with her lover, but afterwards repents for it; a penitent woman.

विप्रलब्धा *f.*=A woman whose lover is false to his appointment or engagement, a woman deceived by her lover.

त्वरम्यिति प्रिये चिन्ताव्याकुलोत्कण्ठिता भवेत् ।

उत्कण्ठिता *f* =A woman whose lover has too long delayed going to the appointed place and is therefore full of anxiety and suspicion

आज्ञापरः प्रियो यस्या स्वाधीनपतिका च सा ॥१८३॥ ई

स्वाधीनपतिका *f* = A woman who has much influence over her husband

अद्य प्रियसङ्केतितदिनमिति शृङ्गारपूर्णसामग्रीम् ।
सज्जीकरोति या स्त्री वासकसज्जेति सा प्रोक्ता॥१८३॥उ

वासकसज्जा *f* = A woman dressed with all her ornaments and making decorations to receive her lover on the appointed day

समा स्नुषाजनीवध्वौ विश्वस्ता विधवा समे ।

A daughter in law – स्नुषा जनी वधू *f*
widow – विश्वस्ता, विधवा *f*

आलि सखी वयस्याथ पतिवत्नी सभर्तृका ॥ १८४ ॥

A female friend – आलि, सखी, वयस्या *f*

A woman having her husband living – पतिवत्नी, सभर्तृका *f*

वृद्धा स्त्री तु पलिक्नी स्याद् दूतीसंचारिके समे ।

An old woman.–वृद्धा, पलिक्नी *f.*

A female messenger.–दूती, संचारिका *f.*

वारस्त्री गणिका वेश्या कुट्टिनी शम्भली समे ॥१८५॥

A public woman.–वारस्त्री, गणिका, वेश्या *f.*

A bawd, a go-between.–कुट्टिनी, शम्भली *f.*

आपन्नसत्त्वा स्याद् गुर्विण्यन्तर्वत्नी च गर्भिणी ।

A pregnant woman.–आपन्नसत्त्वा, गुर्विणी, अन्तर्वत्नी, गर्भिणी *f.*

पैतृष्वसेयः स्यात्पैतृष्वस्रीयश्च पितृष्वसुः ॥ १८६ ॥
सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः ।

Paternal aunt's son, cousin.–पैतृष्वसेय, पैतृष्वस्रीय *m.*

Maternal aunt's son, cousin.–मातृष्वसेय, मातृष्वस्रीय *m.*

Step-brother.–वैमात्रेय, विमातृज *m.*

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी ॥१८७॥
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे ।

Son.–आत्मज, तनय, सूनु, सुत, पुत्र *m.*

Daughter.–आत्मजा, तनया, सूनू, सुता, पुत्री, दुहितृ *f.*

Offspring ( male or female ) – अपत्य, तोक *n*

स्वजाते त्वौरसोरस्यौ तातस्तु जनकः पिता ॥ १८८ ॥

Legitimate son – औरस, उरस्य *adj*

Father – तात जनक, पितृ *m*

जनयित्री प्रसूर्माता जननी भगिनी स्वसा ।

Mother – जनयित्री, प्रसू मातृ जननी *f*

Sister – भगिनी *स्वसृ *f*

ननान्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा ॥१८९॥

Husband s sister – ननान्दृ *f* =पत्यु स्वसा ।

Grand-daughter – नप्त्री, पौत्री *f*

भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।

Husband s brother s wife – यातृ *f*

पतिपत्न्यो प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः ॥१९०॥

Mother in law – श्वश्रू *f*

Father in law – श्वशुर *m*

पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः ।

Paternal uncle – पितृव्य *m* =पितुर्भ्राता ।

Maternal uncle – मातुल *m* =मातुर्भ्राता ।

श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ ॥१९१॥

Wife's brother – श्याल *m* =पत्न्या भ्राता ।

Husband's brother.– देवृ, देवर *m.*=स्वामिनो भ्राता ।

स्वस्रीयो भागिनेयः स्याज्जामाता दुहितुः पतिः ।

Sister's son, nephew.– स्वस्रीय, भागिनेय *m.*

Son-in-law.– जामातृ *m.*=दुहितुः पतिः ।

पितामहः पितृपिता तत्पिता प्रपितामहः ॥ १९२ ॥

मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ।

( 1 ) Paternal and ( 2 ) maternal grand-father.– १. पितामह, पितृपितृ; २. मातामह *m.*

( 1 ) Paternal and ( 2 ) maternal great grand-father.– १. प्रपितामह; २. प्रमातामह *m.*

A kinsman upto seventh remove.– सपिण्ड, सनाभि *m.*

समानोदर्यसोदर्यसगर्भ्यसहजाः समाः ॥ १९३ ॥

Born of the same parents, ( brother or sister).– समानोदर्य, सोदर्य, सगर्भ्य, सहज *adj.*

सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनाः समाः ।

A relative.– सगोत्र, बान्धव, ज्ञाति, बन्धु, स्व, स्वजन *adj.*

धवः प्रियः पतिर्भर्ता जारस्तूपपतिः समौ ॥

Husband.– धव, प्रिय, पति, भर्तृ *m.*

A paramour gallant जार उपपति *m*

भ्रात्रीयो भ्रातृजा भ्रातृभगिन्यौ भ्रातरावुभौ ॥१९४॥

Brother's son – भ्रात्रीय भ्रातृज *m*

Brother & sister भ्रातृ *m dual* ( भ्रातृ *m* brother )

मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ ।

Parents मातापितृ पितृ मातरपितृ प्रसूजनयितृ *m du*

श्वश्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ॥ १९५ ॥

Father and mother in law – श्वश्रूश्वशुर श्वशुर *m du*

Son and daughter – पुत्र *m du* – पुत्रश्च दुहिता च

दंपती जम्पती जायापती भार्यापती च तौ ।

Husband and wife – दंपती, जम्पती जायापती, भार्यापती *m du*

शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे ॥ १९६ ॥

Infancy childhood – शिशुत्व, शैशव, बाल्य *n*

Youth – तारुण्य, यौवन *n*

स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्द्धकम् ।

Old age.– स्थाविर, वृद्धत्व, वार्द्धक *n.*

An assemblage of old folks – वार्द्धक *n.*

स्यादुत्तानशयो डिम्भः स्तनपश्च स्तनंधय ॥१९६॥(अ)

. An infant, a child.– उत्तानशय, डिम्भ, स्तनप, स्तनंधय *m.* or *adj.* [ धे 1 P. to suck, to drink.]

पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा ।

Grayness of the hair.– पलित *n.*= जरसा केशादौ शौक्ल्यम् ।

Oldage.– विस्रसा, जरा *f.*

बालस्तु स्यान्माणवको वयस्यस्तरुणो युवा ॥ १९७ ॥

Child, boy or girl.– बाल, माणवक *m.*

Young, adult.– वयस्य, तरुण, युवन् *adj.*

प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ।

Old, aged – प्रवयस्, स्थविर, वृद्ध, जीन, जीर्ण, जरत् *adj.*

[ ज़ 1, 4, 9 P. to grow old, to wear out.]

जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ॥ १९८ ॥

Younger.– जघन्यज, कनिष्ठ, यवीयस्, अवरज, अनुज *adj.*

पूर्वजस्त्वग्रजोऽग्रियो बलवान्मांसलोंऽसलः ।

Elder पूर्वज, अग्रज, अग्रीय *adj*
Strong robust – बलवत्, मांसल, असल *adj*

तुन्दिलस्तुन्दिभस्तुन्दी खर्वो ह्रस्वश्च वामन ॥ १९९॥
Fat bulky – तुन्दिल तुन्दिभ तुन्दिन् *adj*.
Dwarfish – खर्व, ह्रस्व वामन *adj*

कुब्ज पङ्गु कुणि खञ्जो बधिरोऽन्धश्च केकर ।
ह्येते विकलाङ्गा स्यु भिषग्वैद्यौ चिकित्सके ॥२००
Hump backed – कुब्ज *m*
Crippled, lame – पङ्गु *m*
Crippled in the arm – कुणि *m f*
Lame or crippled in the leg – खञ्ज *m*
Deaf – बधिर *m f*
Blind – अन्ध *m f*
Squint eyed – केकर *m*
Doctor, physician – भिषज्, वैद्य, चिकित्सक *m*

अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया ।

Health – अनामय, आरोग्य *n*
Healing curing, administering or applying remedies – चिकित्सा, रुक्प्रतिक्रिया *f*
(चिकित्स् from कित् 1 P A to administer

remedies, to cure; with वि to doubt, to inquire.)

भेषजौषधभैषज्यान्यगदो जायुरित्यपि ॥ २०१ ॥

Medicine.– भेषज, औषध, भैषज्य *n.*; अगद, जायु *m.*

स्त्री रुग्रुजा चोपतापरोगव्याधिगदामयाः ।

Disease, illness.– रुज्, रुजा *f.*; उपताप, रोग, व्याधि, गद, आमय *m.*

क्षयः शोषश्च यक्ष्मा च कासस्तु क्षवथुः पुमान् ॥

Consumption.– क्षय, शोष, यक्ष्मन् *m.*

Cough.– कास, क्षवथु *m.*

(शुष् 4 P. to become dry, to be withored, to be afflicted.)

व्रणोऽस्त्रियामरुः क्लीबे पामपामे विचर्चिका ॥२०१॥ (अ)

A wound.– व्रण *m.*, *n.*; अरुस् *n.*

Itch.– पामन्, पामा, विचर्चिका *f.*

कण्डूः खर्जूश्च कण्डूया विस्फोटः पिटकस्तथा ॥२०२॥

Itch, itching, scratching.– कण्डू, खर्जू, कण्डूया *f.*

A boil, pustule.– विस्फोट, पिटक *m.*

वार्तो निरामयः कल्यो विकृतव्याधितातुराः ।

Recovered cured – वात्त, निरामय वल्य *adj*

Sick, ill – विकृत, व्याधित आतुर *adj*

शुक्रं तेजोरेतसी च बीजवीर्येन्द्रियाणि च ॥ २०३ ॥

Semen – शुक्र तेजस रेतस, बीज वीर्य, इन्द्रिय *n*

मायु पित्त कफः श्लेष्मा स्त्रिया तु त्वगसृग्धरा ।

Bile – मायु *m* पित्त *n*

Phlegm – कफ, श्लेष्मन् *m*

Skin – त्वच असृग्धरा *f*

पृणिका स्यन्दिनी लाला नाडी तु धमनि शिरा ॥२०३ अ

Saliva spittle – सृणिका, स्यन्दिनी लाला *f*

An artery or vein – नाडी धमनि, शिरा *f*

अन्त्रं पुरीतद् गुल्मस्तु प्लीहा पुंस्यथ वस्नसा ।

स्नायु स्त्रियां कालखण्डयकृती तु समे इमे ॥ २०४ ॥

The entrails – अन्त्र, पुरीतत् *n*

Spleen – गुल्म, प्लीहन् *m*

Muscles – वस्नसा, स्नायु *f*

The liver – कालखण्ड यकृत् *n*

पिशितं तरसं मांसं पललं क्रव्यमामिषम् ।

Flesh – पिशित, तरस, मांस, पलल, क्रव्य आमिष *n*,

रुधिरेऽसृग्लोहितास्ररक्तक्षतजशोणितम् ॥ २०४ ॥ अ

Blood.– रुधिर, *असृज्, लोहित, अस्र, रक्त, क्षतज, शोणित *n.*

मूत्रं प्रस्रावोऽथ विष्ठा पुरीषं शमलं शकृत् ।

Urine – मूत्र *n.*; प्रस्राव *m.*

Fæces, excrement.–विष्ठा *f.*; पुरीष, शमल, शकृत् *n.*

बुक्काग्रमांसं हृदयं हृन्मेदस्तु वपा वसा ॥

The substance of the heart.– बुक्का *f.*; अग्रमांस *n.*

Heart.– हृदय, * हृद् *n.*

Fat – मेदस् *n.*; वपा, वसा *f.*

स्याच्छरीरास्थि कंकालः कपालः स्यात्तु खर्परः ॥२०५॥

Skeleton.– कंकाल *m.*=शरीरास्थि.

Skull.– कपाल, खर्पर *m.* ( *अस्थि *n.* bone )

अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम् ।
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ २०५ ॥ अ
कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः ।

Limb, a member.– अङ्ग *n.*, प्रतीक, अवयव, अपघन *m.*

The body.– कलेवर, गात्र, वपुस्, संहनन, शरीर,

वर्ष्मन् *n* विग्रह, काय *m* देह *m n*, मूर्ति तनु, तनू *f*

वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिणम् ॥ २०६ ॥

Left left hand side – सव्य *adj* =वामं शरीरम् ।

( वाम *adj* =left )

Right, right hand side – अपसव्य *adj* =दक्षिणं शरीरम् ।

( दक्षिण *adj* =right, on the right )

सक्थि क्लीबे पुमानूरुः पदङ्घ्रिश्चरणोऽस्त्रियाम् ।

Thigh – *सक्थि *n* ऊरु *m*

Foot – *पद *n* अङ्घ्रि *m* चरण *m n* (पाद *m* )

जङ्घाऽस्य घुटिका जानु कटिः श्रोणिः स्त्रियां नमे ॥२०७॥

Leg – जङ्घा *f*

Ankle – घुटिका *f*

Knee – जानु *n*

Hip loins – कटि, श्रोणि *f*

पश्चान्नितम्बः स्त्रीकट्या क्लीबे तु जघनं पुरः ।

The hinder part of the loins of a woman hip, buttocks – नितम्ब *m*

The front part of the loins of a woman, hip, loins.–जघन *n.*

पिचण्डकुक्षी जठरोदरं तुन्दं स्तनौ कुचौ ।

The belly.–पिचण्ड, कुक्षि *m.*, जठर, उदर, तुन्द *n.*

The female breasts.– स्तन, कुच *m.*

( also उरोज, पयोधर, वक्षोज &c. *m.* )

चूचुकं तु कुचाग्रं स्यान्न ना क्रोडं भुजान्तरम् ॥२०८॥

Nipple.– चूचुक, कुचाग्र *n.*

Chest.– क्रोड *n.* ( or क्रोडा *f.* ), भुजान्तर *n.*

उरो वत्सं च वक्षश्च पृष्ठं तु चरमं तनोः ।

बाहुमूले उभे कक्षौ पार्श्वमस्त्री तयोरधः ॥ २०९ ॥

The breast, bosom.– उरस्, वत्स, वक्षस् *n.*

Back.– पृष्ठ *n.*=तनोश्चरमम् ।

Arm-pit.– बाहुमूल *n.*; कक्ष *m.*

Sides.– पार्श्व *m. n.*=तयोः कक्षयोरधोभागः ।

स्कन्धोऽस्यांसोऽवलग्नं तु मध्योऽस्त्री मध्यमं तथा ।

Shoulder.– स्कन्ध *m.*; अंस *m.* & *n.*

Waist.– अवलग्न *n.*; मध्य *m.* & *n.* मध्यम *n.*

दोर्दोषा च भुजो बाहुः पाणिर्हस्तः करस्तथा ॥२१०॥

Arm.– *दोस्, *दोषन्, भुज, बाहु *m.*

Hand.– पाणि, हस्त, कर *m.*

कूर्परोऽथ प्रकाष्ठोऽथ मणिबन्धोऽथ चाङ्गुली ।

Elbow – कूर्पर *m*

Fore arm – प्रकाष्ठ *m*

Wrist – मणिबन्ध *m*

Finger, ( toe also ) – अङ्गुली *f*

अङ्गुष्ठस्तर्जनी याद्यास्ता नखो नखरोऽस्त्रियाम् ॥२११॥

Thumb – अङ्गुष्ठ *m*

Index finger or fore finger – तर्जनी *f*

( मध्यमा *f* middle finger अनामिका *f* the ring finger कनिष्ठिका *f* the little finger )

Nail – नख, नखर *m* & *n*

वितस्ति स्त्री चपेटो ना मुष्टि स्त्री चाञ्जलिः पुमान् ।

Span – वितस्ति *f*

Open hand or palm, with fingers extended – चपेट *m*

Fist – मुष्टि *f*

Hands joined ( so as to form cavity. ) – अञ्जलि *m*

कण्ठो गलोऽथ ग्रीवायां शिरोधिः कंधरेत्यपि ॥२१२॥

Throat – कण्ठ, गल *m*

Neck – ग्रीवा शिरोधि, कंधरा *f*

वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम् ।

The mouth; face – वक्त्र, आस्य, वदन, तुण्ड, आनन, लपन, मुख *n.*

क्लीवे घ्राणं गन्धवहा घोणा नासा च नासिका ॥२१३॥

No-e. – घ्राण *n.*, गन्धवहा, घोणा, नासा, नासिका *f.*

ओष्ठाधरौ तु रदनच्छदौ दशनवाससी ।

Lip. – ओष्ठ, अधर, रदनच्छद *m.*; दशनवासस् *n.*

अधस्ताच्चिबुकं गण्डौ कपोलौ तत्परो हनुः ॥ २१४ ॥

Chin. – चिबुक *n.*

Cheek. – गण्ड, कपोल *m.*

Jaw. – हनु *m.*

रदना दशना दन्ता रदास्तालु तु काकुदम् ।

Tooth – रदन, दशन, दन्त, रद *m.*

Palate – तालु, काकुद *n.*

रसज्ञा रसना जिह्वा प्रान्तावोष्ठस्य सृक्किणी ॥ २१५ ॥

Tongue. – रसज्ञा, रसना, जिह्वा *f.*

The corner of the mouth. – सृक्कि or सृक्किन् *n.* ( सृक्किणी *f.* )

ललाटमालिकस्य भ्रूः स्त्री तारकाक्ष्णः कनीनिका ।

Forehead – ललाट, भाल *n.*

Eye-brow. – *भ्रू *f.*

Pupil of the eye – तारका, कनीनिका *f*

लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी ॥ २१६ ॥
दृग्दृष्टी चास्रु नेत्राम्बु रोदनं चास्रमश्रु च ।

The eye, sight – लोचन नयन, नेत्र, ईक्षण, चक्षुस, *अक्षि *n* दृग, दृष्टि *f*

Tear अस्र नेत्राम्बु, रोदन अस्र, अश्रु *n*

(लोच 1 A to see आलोच, समालोच *Cau* to consider to regard)

(चक्ष 2 A to see to perceive to name with आ to tell to declare to address with प्रति & आ to repulse with वि to explain)

अपाङ्गौ नेत्रयोरन्तौ कटाक्षोऽपाङ्गदर्शने ॥२१७॥

Corner of the eye – अपाङ्ग *m* =नेत्रयोरन्त

A side long look – कटाक्ष *m* –अपाङ्गदर्शनम्

कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः ।

Ear – कर्ण, शब्दग्रह *m* श्रोत्र *n* श्रुति *f* श्रवण श्रवस *n*

(कर्ण् 10 P A to hear)

उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम् ॥२१८॥

Head – उत्तमाङ्ग शिरस शीर्ष *n* मूर्धन् *m* मस्तक *m* & *n*

( उत्तम+अङ्ग=नर्मं०, syn. वराङ्ग. )

चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।

Hair.– चिकुर; कुन्तल, वाल, कच, केश, शिरोरुह *m.*

शिखण्डकः काकपक्षोऽथालकाश्चूर्णकुन्तलाः ॥ २१९ ॥

Side-lock of hair.– शिखण्डक, काकपक्ष *m.*

Curled hair.– अलक, चूर्णकुन्तल *m.*

कबरी केशवेशोऽथ धम्मिल्लः संयताः कचाः ।

Braid of hair.– कबरी *f.*; केशवेश *m.*

Braided and ornamented hair.—धम्मिल्ल *m.* =संयताः कचाः ।

शिखा चूडा केशपाशी व्रतिनस्तु सटा जटा ॥ २२० ॥

Crest of hair on the crown of the head.– शिखा, चूडा, केशपाशी *f.*

Matted hair.– सटा, जटा *f.*=व्रतिनः शिखा.

पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।

After words meaning hair, these words mean much or flowing hair.– पाश, पक्ष, हस्त, कलाप *m.*

तनूरुहं रोम लोम तद्वृद्धौ श्मश्रु पुंमुखे ॥ २२१ ॥

Hair on the body.– तनूरुह, रोमन्, लोमन् *n.*

Beard.– श्मश्रु *n.*

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ।

Dress, decoration.–आकल्प, वेष (or वेश) *m.*; नेपथ्य, प्रतिकर्मन्, प्रसाधनम् *n*

(साध 5 P. to finish, to accomplish; *Cau.* साधय् to go, to set out, to obtain; प्रसाधय् *Caus.* to dress, to adorn.)

प्रसाधितो मण्डितश्च भूषितश्च परिष्कृतः ॥ २२२ ॥

Adorned, decorated, decked – प्रसाधित, मण्डित, भूषित, परिष्कृत *adj.*

विभ्राड् भ्राजिष्णुरोचिष्णू भूषणं स्यादलङ्क्रिया ।

Elegant, splendid, radiant in ornament or vesture.– विभ्राज्, भ्राजिष्णु, रोचिष्णु *adj.*

The act of adorning.– भूषण *n* , अलङ्क्रिया *f.*

अलङ्कारस्त्वाभरणं परिष्कारो विभूषणम् ॥ २२३ ॥
मण्डनं चाथ मुकुटं किरीटं पुन्नपुंसकम् ।

An ornament.– अलङ्कार *m.*; आभरण *n* ; परिष्कार *m* , विभूषण, मण्डन *n.*

Crown – मुकुट *n.*, किरीट *m.* & *n.*

चूडामणिः शिरोरत्नं तरलो हारमध्यगः ॥ २२४ ॥

Crest-jewel – चूडामणि *m* =शिरोरत्न *n.*

